उन्मीलद्भुजगेन्द्रसद्मसुभगान्याविर्भवद्भूपति-
श्रीचिह्नानि जिनेक्षणागतसुरश्रेणीविमानानि च ।
पूजाबर्जनसज्जदुन्दुभिरवोद्यावप्रमोदोदया
दित्थ त्रीण्यपि यस्य जन्मनि जगन्त्यासन्स वोऽव्याज्जिन ५१२
लोकवित्त्वे कवित्वे वा यदि चातुर्यचञ्चव ।
सोमदेवकवे सूक्ती समभ्यस्यन्तु साधव ॥ ५१३ ॥

इति सकलतार्किकलोकचूडामणे श्रीमनेमिदेवभगवत शिष्येण सद्योनवद्यगद्यपद्य विद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो नाम तृतीय आश्वास समाप्त ।

---

**उन्मीलदित्यादि** । स जगत्प्रसिद्धो जिन श्रीमद्भगवदर्हत्सर्वज्ञवीतराग वो युष्मान् अव्यात् रक्षतु । स क । यस्य तीर्थंकरस्य परमदेवस्य जन्मनि जन्मकल्याणे पूजावर्जनसज्जदुन्दुभय पटहास्तेषा रवाणा उद्याव उत्सवस्तस्य प्रमोदोदय प्रादुर्भावस्तस्मात् इत्थ उक्तप्रकारेण त्रीण्यपि जगन्ति लोका आसन् बभूवु । कथभूतानि जगन्ति । उन्मीलद्भुजगेन्द्रसद्मसुभगानि उन्मीलन्ति पातालात् प्रादुर्भवन्ति यानि भुजगेन्द्रसद्मानि तै सुभगानि । पुन कथभूतानि जगन्ति । आविर्भवद्भूपतिश्रीचिह्नानि आविर्भवन्ति मर्त्यलोके प्रादुर्भवन्ति यानि भूपतीना चक्रवर्त्यादिनरेन्द्राणा श्रीणा लक्ष्मीणा चिह्नानि ध्वजच्छत्रचामरचन्द्रोपकादीनि येषु जगत्सु तानि तथोक्तानि। पुन कथभूतानि जगन्ति । जिनेक्षणागतसुरश्रेणीविमानानि जिनस्य वृषभादेरीक्षणमवलोकन तदर्थमागता उपनता या सुरश्रेण्य सुरसमूहास्तासा विमानानि येषु जगत्सु तानि तथोक्तानि। अतिशयसमुच्चयालकार ॥

**लोकवित्त्वे इत्यादि** । साधवो विद्वासो यदि चेत् लोकवित्त्वे लोकव्यवहारपरिज्ञाने वा अथ वा कवित्वे कवीश्वरत्वे चातुर्यचञ्चव चातुर्यनिपुणा प्रवीणा वर्तन्ते । तर्हि श्रीसोमदेवाचार्यस्य सूक्ती सुवचनानि समभ्यस्यन्तु अनुशीलयन्त्विति भद्रम् । समुच्चयालकार ॥

इति सकलतार्किकलोकचूडामणे श्रीमनेमिदेवभगवत शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो नाम तृतीय आश्वास समाप्त इति । अस्य व्याख्या पूर्ववत् ज्ञातव्या ॥

इति श्रीपद्मनन्दिदेवेन्द्रकीर्तिविद्यानन्दिमल्लिभूषणाम्नायेन भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा गुर्जरदेशसिंहासनभट्टारकश्रीलक्ष्मीचन्द्राभिमतेन मालवदेशभट्टारकश्रीसिंहनन्दिप्रार्थनया यतिश्रीसिद्धान्तसागरव्याख्याकृतिनिमित्त नवनवतिमहामहावादिस्याद्वादलब्धविजयेन तर्कव्याकरणच्छन्दोऽलकारसिद्धान्तसाहित्यादिशास्त्रनिपुणमतिना प्राकृतव्याकरणाद्यनेकशास्त्रचञ्चुना सूरिश्रीश्रुतसागरेण विरचिताया यशस्तिलकचन्द्रिकाभिधानाया यशोधरमहाराजचरितचम्पुमहाकाव्यटीकाया यशोधरमहाराजराजलक्ष्मीविनोदवर्णन नाम तृतीयाश्वासचन्द्रिका परिसमाप्ता इति शुभम् ॥